ॐ नमः शिवाय सर्वतत्त्वरूपिने।

ॐ

प्रातर्स्मरामि मनसा ईश्वरस्वरूपं
श्री सत्गुरुं हंसवाहनमात्मगम्यम्।
योगीश्वरं हरिहरं ॐकारमूलं
सत्-चित्-सुखं भगवंतं भ्रुवाभूषणं च॥

ॐ

सदसदनुग्रहनिग्रह-
गृहीतमुनिविग्रहो भगवान्।
सर्वासामुपनिषदां
दुर्वासा जयति दैशिकः प्रथमः ॥ १ ॥

जयति गुरुरेक एव
श्रीश्रीकण्ठो भुवि प्रथितः।
तदपरमूर्त्तिर्भगवान्
महेश्वरो भूतिराजश्च ॥ २ ॥

श्री वसुगुप्तमहागुरु-
सोमानन्द प्रभूत्पलाचार्यान्।
अभिनवगुप्तं नाथं
वन्दे श्रीक्षेमराजञ्च ॥ ३ ॥

कारुण्यामृतसिन्धो-
रुदितमिवावर्तमीक्षणापाङ्गात्।
मौक्तिकमयं दधाना
ताटङ्कं जयति गौरवी मूर्त्तिः ॥ ४ ॥

सिततर संविदवाप्यं
सदसत्कलनाविहिनमनुपाधि।
जयति जगत्त्रयरूपं
नीरूपं देवि ते रूपम् ॥५॥
भैरवरूपी कालः
सृजति जगत्कारणादि कीटान्तम्।
इच्छावशेन यस्याः
सा त्वं भुवनाम्बिका जयसि ॥६॥
जयति शशाङ्कदिवाकर-
पावकधामत्रयान्तरव्यापि।
जननि तव किमपि विमलं
स्वरूपरूपं परं धाम ॥७॥
कवलितसकलजगत्त्रय-
विकटमहाकालकवलनोद्युक्ता।
उपभुक्तभावविभव-
प्रभवापि कृशोदरी जयसि ॥८॥
अव्ययमकुलममेयं
विगलितसदसद्विवेककल्लोलम्।

जयति प्रकाशविभव-
स्फीतं काल्या परं धाम ॥ ९ ॥
ऋतुमुनिसंख्यं रूपं
विभज्य पञ्चप्रकारमेकैकम् ।
दिव्यौघमुद्गिरन्ती
जयति जगत्तारिणी जननी ॥ १० ॥

---

रक्षतु कलहेरम्बस् त्रिजगद्वन्द्यः स हेरम्बः ।
बहुविधभृङ्गारचितं यद्वदनं शंभुना रचितम् ॥ ११ ॥
नमो नालायते शुण्डा विषाणेन मृणालिने ।
प्रत्यक्कमलकन्दाय कर्णाभ्यां पर्णशालिने ॥ १२ ॥
तद्देवताविभवभाविमहामरीचि-
चक्रेश्वरायितनिजस्थितिरेक एव ।
देवीसुतो गणपतिः स्फुरदिन्दुकान्तिः
सम्यक्समुच्छलयतान्मम संविदब्धिम् ॥ १३ ॥

शक्तिपातसमये विचारणं
प्राप्तमीश न करोषि कर्हिचित्।
अद्य मां प्रति किमागतं यतः
स्वप्रकाशनविधौ विलम्बसे ॥१४॥
धर्माधर्मव्याप्तिविनाशान्तरकाले
शक्तेः पातो गाहनिकैर्यः प्रतिपन्नः।
तं स्वेच्छातः संगिरमाणा स्तवकाद्याः
स्वातन्त्र्यं तत्त्वय्यनपेक्षं कथयेयुः ॥१५॥
ये यौष्माके शासनमार्गे कृतदीक्षा
संगच्छन्तो मोहवशाद्विप्रतिपत्तिम्।
नूनं तेषां नास्ति भवद्ध्यानुनियोगः
संकोचः किं सूर्यकरैस्तामरसानाम् ॥१६॥
ज्ञातज्ञेया धातृपदस्था अपि सन्तो
ये त्वन्मार्गात्कापथगास्तेऽपि न सम्यक्।
प्रायस्तेषां लैङ्गिकबुद्ध्यादिसमुत्थो
मिथ्याबोधः सर्पवसादीपजकल्पः ॥१७॥
यस्माद्विद्धं सूतकमुखेन नु ताम्रं
तद्वद्भूयः स्वां प्रकृतिं नो समुपेयात्।

नो तैः पीतं भूतलंसस्थैरमृतं त-
द्येषां तृट्क्षुद्दुःखविबाधाः पुनरस्मिन् ॥१८॥

---

असुरसुरवृन्दवन्दित-
मभिमतवरवितरणे निरतम् ।
दर्शनशताग्र्यपूज्यं
प्राणतनुं गणपतिं वन्दे ॥१९॥

वरवीरयोगिनीगण-
सिद्धावलिपूजिताङ्घ्रियुगलम् ।
अपहृतविनयिजनार्तिं
वटुकमपानाभिधं वन्दे ॥२०॥

आत्मीयविषयभोगै-
रिन्द्रियदेव्यः सदा हृदम्भोजे ।
अभिपूजयन्ति यं तं
चिन्मयमानन्दभैरवं वन्दे ॥२१॥

यद्धीबलेन विश्वं
भक्तानां शिवपथं भाति ।
तमहमवधानरूपं
सद्गुरुममलं सदा वन्दे ॥२२॥

उदयावभासचर्वरा-
लीलां विश्वस्य या करोति अनिशम्।
आनन्दभैरवीं तां
विमर्शरूपामहं वन्दे ॥२३॥
अर्चयति भैरवं या
निश्चयकुसुमैः सुरेशपत्रस्था।
प्रणमामि बुद्धिरूपां
ब्रह्माणीं तामहं सततम् ॥२४॥
कुरुते भैरवपूजा-
मनलदलस्थाभिमानकुसुमैर्या।
नित्यमहंकृतिरूपां
वन्दे तां शाम्भवीमम्बाम् ॥२५॥
विदधाति भैरवार्चां
दक्षिणदलगा विकल्पकुसुमैर्या।
नित्यं मनः स्वरूपां
कौमारिं तामहं वन्दे ॥२६॥
नैऋतदलगा भैरव-
मर्चयते शब्दकुसुमैर्या।
प्रणमामि श्रुतिरूपां
नित्यं तां वैष्णवीं शक्तिम् ॥२७॥

पश्चिमादिग्दलसंस्था
हृदयहारैः स्पर्शकुसुमैर्या ।
तोषयति भैरवं तां
त्वग्रूपधरां नमामि वाराहीम् ॥२८॥
वरतररूपविशेषै-
र्मारुतदिग्दलनिषण्णा देहा या ।
पूजयति भैरवं ता-
मिन्द्राणीं दृक्तनुं वन्दे ॥२९॥
धनपतिकिसलयनिलया
या नित्यं विविधषड्रसाहारैः ।
पूजयति भैरवं तां
जिह्वाभिख्यां नमामि चामुण्डाम् ॥३०॥
ईशदलस्था भैरव-
मर्चयते परिमलैर्विचित्रैर्या ।
प्रणमामि सर्वदा तां
घ्राणाभिख्यां महालक्ष्मीं ॥३१॥
षड्दर्शनेषु पूज्यं
षट्त्रिंशत्तत्त्वसंवलितम् ।
आत्माभिख्यं सततं
क्षेत्रपतिं सिद्धिदं वन्दे ॥३२॥

संस्फुरदनुभवसारं
सर्वान्तः सततसन्निहितम् ।
नौमि सदोदितमित्थं
निजदेहगदेवताचक्रम् ॥ ३३ ॥

---

पुष्णन्देवानमृतविसरैरिन्दुमास्वाद्य सम्य-
ग्भाभिः स्वाभी रसयति रसं यः परं नित्यमेव ।
क्षीणं क्षीणं पुनरपि च तं पूरयत्येवमीदृ-
ग्दोलालीलोल्लसितहृदयं नौमि चिद्भानुमेकम् ॥ ३४ ॥
ओमित्यन्तर्नदति नियतं यः प्रति प्राणि शब्दो
वाणी यस्मात् प्रसरति परा शब्दतन्मात्रगर्भा ।
प्राणापानौ वहति च समौ यो मिथो ग्राससक्तौ
देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ ३५ ॥
नं ब्रह्माण्डव्यवहितपथा नातिशीतोष्णरूपा
नो वा नक्तंदिवगमभिताऽतापनीया पराहुः ।
वैकुण्ठीया तनुरिव रवे राजते मण्डलस्था
सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ३६ ॥
यस्मिन्सोमः सुरपितृनरैरन्वहं पीयमानः
क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः ।

यस्मिन्वेदा मधुनि सरघाकारवद्भ्रान्ति चाग्रे
तच्चण्डांशोरमितममृतं मण्डलस्थं प्रपद्ये ॥ ३७॥
त्वां स्तोष्यामि स्तुतिभिरिति मे यस्तु भेदग्रहोऽयं
सैवाविद्या तदपि सुतरां तद्विनाशाय युक्तः।
स्तौम्येवाहं त्रिविधमुदितं स्थूलसूक्ष्मं परं वा
विद्योपायः परइति बुधैर्गीयते खल्वविद्या ॥ ३८॥
तत्त्वाख्याने त्वयि मुनिजना नेति नेति ब्रुवन्तः
श्रान्ताः सम्यक्त्वमिति न च तैरीदृशो वेति चोक्तः।
तस्मात्तुभ्यं नम इति वचोमात्रमेवास्मि वच्मि
प्रायो यस्मात्प्रसरतितरां भारती ज्ञानगर्भा ॥ ३९॥
तामासाद्य श्रियमिव गृहे कामधेनुं प्रवासे
ध्वान्ते भातिं धृतिमिव वने योजने ब्रह्मनाडिम्।
नावं चास्मिन्विषमविषयग्राहसंसारसिन्धौ
गच्छेयं ते परममृतं यन्न शीतं न चोष्णम् ॥ ४०॥
अग्नीषोमावखिलजगतः कारणं तौ मयूखैः
सर्गादाने सृजसि भगवन्ह्रासवृद्धिक्रमेण।
तावेवान्तर्विषुवति समौ जुह्वतामात्मवह्नौ
द्वावप्यस्तं नयसि युगपन्मुक्तये भक्तिभाजाम् ॥ ४१॥

स्थूलत्वं ते प्रकृतिगहनं नैव लक्ष्यं ह्यनन्ते
सूक्ष्मत्वं वा तदपि सदसद्व्यक्त्यभावादचिन्त्यम्।
ध्यायामीत्थं कथमविदितं त्वामनाद्यन्तमन्त-
स्तस्मादर्के प्रणयिनि मयि स्वात्मनैव प्रसीद ॥४२॥
अग्नीषोमौ प्रकृतिपुरुषौ बिन्दुनादौ च नित्यौ
प्राणापानावपि दिननिशे ये च सत्यानृते द्वे।
धर्माधर्मौ सदसदुभयं योऽन्तरावेश्य योगी
वर्तेतात्मन्युपरतमतिर्निर्गुणं त्वां विशेत्सः ॥४३॥
सोमं पूर्णामृतमिव चरुं तेजसा साधयित्वा
कृत्वा तेनानलमुखजगत्तर्पणं वैश्वदेवम्।
आमावस्यं विघसमिव खे तत्कलाशेषमश्न-
न्ब्रह्माण्डान्तर्गृहपतिरिव स्वात्मयागं करोमि ॥४४॥
तत्त्वालोके तपन सुदिने ये परं संप्रबुद्धा
ये वा चित्तोपशमरजनीयोगनिद्रामुपेताः।
तेऽहोरात्रोपरमपरमानन्दसन्ध्यासु सौरं
भित्वा ज्योतिः परमपरमं यान्ति निर्वाणसंज्ञम् ॥४५॥

लोकाः सर्वे वपुषि नियतं ते स्थितास्त्वं च तेषा-
मेकैकस्मिन्युगपदगुणो विश्वहेतोर्गुणीव।
इत्थं भूते भवति भगवन्न त्वदन्योऽस्मि सत्यं
किंतु ज्ञस्त्वं परमपुरुषोऽहं प्रकृत्यैव चाज्ञः॥४६॥
संकल्पेच्छाद्यखिलकरणप्राणवाण्यो वरेण्याः
संपन्ना मे त्वदभिनवनाज्जन्म चेदं शरण्यम्।
मन्ये चास्तं जिगमिषु शनैः पुण्यपापद्वयं त-
द्भक्तिश्रेद्धा तव चरणयोरन्यथा नो भवेताम्॥४७॥
तस्यैव तु प्रसादेन भक्तिरुत्पद्यते नृणाम्।
यया यान्ति परां सिद्धिं तद्भावगतमानसाः॥४८॥
सत्यं भूयो जननमरणे त्वत्प्रपन्नेषु न स्त-
स्तत्राप्येकं तव नुतिफलं जन्मयाचे तदित्थम्।
त्रैलोक्येशः शम इव परः पुण्यकायोऽप्ययोनिः ‡
संसाराब्धौ प्लव इव जगत्तारणाय स्थिरः स्याम्॥
४९॥
मन्दाक्रान्ते तमसि भवता नाथ दोषावसाने
नान्तर्लीना मम मतिरियं गाढनिद्रां जहाति।
तस्मादस्तं गमिततमसा पद्मिनीवात्मभासा
सौरीत्त्येषा दिनकर परं नीयतामाशु बोधम्॥५०॥

समुल्लसन्तु भगवन् भवद्भानुमरीचयः ।
विकसत्वेष यावन्मे हृत्पद्मः पूजनाय ते ॥५१॥
आसंसारोपचितसदसत्कर्मबन्धाश्रिताना-
मधिव्याधिप्रजननमरणक्षुत्पिपासार्दितानाम् ।
मिथ्याज्ञानप्रबलतमसा नाथ चान्धीकृतानाम्
त्वं नः त्राता भव करुणया यत्रतत्रस्थितानाम् ॥५२॥
रागद्वेषान्धकारोऽपि येषां भक्तिविभा जितः ।
तेषां महीयसामग्रे कतमे ज्ञानशालिनः ॥५३॥
सत्यासत्यस्खलितवचसां पौंश्चलज्ञोज्झितानां-
मज्ञानानामफलसफलप्रार्थनाकातराणाम् ।
सर्वावस्थास्वखिलविषयाभ्यस्तकौतूहलानां
त्वं नस्त्राता भव पितृतया भोगलोलाभिकाराणाम् ॥५४॥
यावद्देहं जरयति जरा नान्तकादेत्य दूती
नो वा भीमस्त्रिफणभुजगाकारदुर्वारपाशः ।
गाढं कण्ठे लगति सहसा जीवितं लेलिहान-
स्तावद्भक्ताभयदशरदयं श्रेयसे नः प्रसीद ॥५५॥
विश्वप्राणग्रसनरसनाटोपकोपप्रगल्भं
मृत्योर्वक्त्रं दहननयनोद्दामदंष्ट्राकरालम् ।

यावद्दृष्ट्वा व्रजति न भिया पञ्चतामेष काय-
स्तावन्नित्यामृतमय खे पाहि नः कांदिशीकान् ॥५६॥
ये चारोग्यं दिशति भगवान्सेवितोऽप्येवमाहु-
स्ते तत्त्वज्ञा जगति सुभगा भोगयोगप्रधानाः ।
भुक्तेर्मुक्तेरपि च जगतां यच्च पूर्णं सुखाणां - नां
तस्यान्योऽर्कादमृतवपुषः को हि नामास्तु दाता ॥५७॥
स्वेन विना मृतमण्डं
स्वविशबलेन जीवयन्नेकः ।
मार्त्तण्डः परमोऽसौ
परनमासि न किं त्वया दृष्टः ॥ ५८ ॥
हित्वा हित्वा गुरुचपलतामप्यनेकान्निजार्था-
न्यैरकार्यीकृतमिव भवत्सेवनं मत्प्रियार्थम् ।
तेषामिच्छाम्युपकृतिमहं स्वेन्द्रियाणां प्रियाणा-
मादौ तस्मान्मम दिनपते देहि तेभ्यः प्रसादम् ॥५९॥
तास्तृप्ताः स्वात्मनः पूर्णं हृदयैकान्तशायिनम् ।
दिद्व्योमभैरवं देवमभेदेनाधिशेरते ॥६०॥
विदधते कर्म यत्किंचिदक्षेच्छामात्रपूर्वकम् ।
तेनैव शुभभाजः स्युस्तृप्ताः करणदेवताः ॥६१॥

या पन्थानं दिशति शिखिशिराद्युत्तरं देवयानं
 या वा कृष्णं पितृपथमथो दक्षिणां प्रावृडाद्यम्।
ताभ्यामन्या विषुवदभिजिन्मध्यमा कृत्यशून्या
 धन्या काचित्प्रकृतिपुरुषावन्तरा मेऽस्तु वृत्तिः॥ ॥६१॥
किं तन्नामोच्चरति वचनं यस्य नोच्चारकस्त्वं
 किं तद्वाच्यं सकलवचसां विश्वमूर्ते न यत्त्वम्।
तस्मादुक्तो यदपि तदपि त्वन्नुतो भक्तियोगा-
 दस्माभिस्तद्भवतु भगवंस्त्वत्प्रसादेन धन्यम्॥६२॥
जगत्सर्वं मत्तः प्रभवति विभेदेन बहुधा
 तथाप्येतद्द्रष्टुं मयि विगलिते त्वत्र न परः।
तदित्थं यः सृष्टिस्थितिविलयमेकीकृतिवशा-
 दनंशं पश्येत्स स्फुरति हि तुरीयं पदमितः॥६४॥
प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
 प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कवलयन्।
प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
 प्रसादात्ते जन्तुः शिवमकुलमम्ब प्रविशति॥६५॥

विरिञ्च्याख्या मातः! सृजसि हरिसंज्ञा त्वमवसि।
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम्॥
भवन्ती सादाख्या शिवयसि च पापौघदलिनी।
त्वमेवैकानेका भवसि कृतभेदैर्गिरिसुते॥ ६६॥
विद्ये विद्ये वेद्ये विविधसमये वेदजननि।
विचित्रे विश्वाद्ये विनयसुलभे वेदगुलिके॥
शिवाज्ञे शूलस्थे शिवपदवदान्ये शिवनिधे।
शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम्॥६७॥
असंख्यैः प्राचीनैर्जननि जननैः कर्मविलया-
द्दते जन्मन्यन्ते गुरुवपुषमासाद्य गिरिशाम्॥
अवाप्याज्ञां शैवीं क्रमतनुरपि त्वां विदितवान्।
नयेयं त्वत्पूजास्तुतिविरचनेनैव दिवसान्॥६८॥
ॐ पूर्णमिदं पूर्णमदः पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते। ॐ शान्तिः३॥

इति शिवम्॥

मनः स्थिरं यस्य विनावलम्बनं
वायुः स्थिरो यस्य बिनावरोधनम् ॥
दृष्टिः स्थिरा यस्य विनावलोकनं
स्यात्सैव मुद्रा बिमला च खेचरी ॥

## Prayer.

स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो
भुवनस्यास्य गोप्ता।
य ईशेऽस्य जगतो नित्यमेव नान्यो
हेतुर्विद्यत ईशनाय ॥
यो ब्रह्माणं विदधाति पूर्वं यो वै
वेदांश्च प्रहिणोति तस्मै।
तं ह देवं आत्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये॥

"He is the Soul of the Universe; He is Immortal; His is the Rulership; He is the All-Knowing; the All-Pervading, the Protector of the Universe, the Eternal Ruler. None else is there efficient to govern the world eternally.

He Who at the beginning of Creation projected Brahmâ (i.e., the Universal Consciousness), and Who delivered the Vedas unto him — seeking liberation I go for refuge unto that Effulgent One, Whose light turns the understanding towards the Atman."

— Svetâsvatara-Upanishad, VI. 17.

ॐ नमो भगवते ईश्वरस्वरूपाय।

धरित्री कीलालं शुचिरपि समीरोऽपि गगनं
त्वमेका कल्याणी गिरिशरमणी कालि सकलं।
स्तुतिः का ते मातर्निजकरुणया मामगतिकं
प्रसन्ना त्वं भूया ;भवमनु न भूयान्मम जनुः॥१॥

प्रसूते संसारं जननि भवती पालयति च
समस्तं क्षित्यादि प्रलयसमये संहरति च।
अतस्त्वं धातासि त्रिभुवनपतिः श्रीपतिरपि,
महेशोऽपि प्रायः सकलमपि किं स्तौमिभवती॥२॥

वदामस्ते किंवा जननि वयमुच्चैर्जड़धियः
न धाता नापीशो हरिरपि न ते वेत्ति परमं।
तथापि त्वद्भक्तिः मुखरयति चास्माकममिते
तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः॥३॥

Salutations Unto Bhagwan Ishwar Swaroopa!

3. What, indeed, O Mother! Can we of so dull a mind say of Thee whose True Being not even Dhata (Brahma), Isha or Hari know? Yet despite our dullness and ignorance, our devotion towards Thee makes us talk of Thee. Therefore, O Dark Devi, forgive this our folly. Anger towards ignorant creatures such as we, is not befitting Thee.

2. O Mother, Thou givest birth to and protects the world, and at the time of dissolution dost widraw to Thyself the earth and all things: therefore, Thou art Brahma, and the Lord of the three worlds, the spouse of Shri, and Mahesha, and all other beings and things. Ah, Me! How, then, shall I praise Thy greatness.

1. O Kali, spouse of Girisha, Thou art Earth, Water, Fire, Air and Ether. Thou art All. Thou art One and Beneficient. What can be said in praise of Thee, O Mother! Of Thy mercy show Thy favour towards me, helpless as I am. By Thy grace may I never be reborn.

OM-TAT-SAT.

शरणं तरुणेन्दुशेखरः
शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ
शरणं नान्यदुपैमि दैवतम्॥ १॥

बहवो भवतानुकम्पिता
किमितीशान न माऽनुकम्पसे।
दधता किमु मन्दराचलं
परमाणुः कमठेन दुर्धरः॥ २॥
॥ ॐ नमो भगवते ईश्वरस्वरूपाय॥

## अथ महागायत्रीस्तुतिः ।

सदा गवेषयन् जगत्त्रयेषु वेदमातरं
चिदाऽऽत्मना कृतस्थितिं, समत्र चाऽद्य लब्धवान् ।
उदऽस्तु गद्गदं महोद्रयात्प्रणौमि भक्तिनौ-
कया सुदुस्तरं, द्रुतं, तितीर्षुराऽऽपदऽर्णवम् ॥ १ ॥
सुदीनलोकपातिनी, सतां कृपाऽतिशोभते
ह्यऽतः सुधांशुचक्षुषे,-क्षयाऽम्ब ! मादृशं जनम् ।
नवाऽपि हीयते तवे,-षदीशि ! पालनेन नो
भवात् यतः कुपुत्रता, न भासते प्रसूहृदि ॥ २ ॥
नमामि मुक्तविद्रुम,-प्रतप्तहाटकाऽसिताऽ-
वदातवर्णसुन्दरैः, षडऽर्धलोललोचनैः ।
सरोजषण्डबान्धव,-प्रतप्तहाटकप्रभैः
किरीटरत्नरंजितैः, सुधांशुखण्डमंडितैः ॥ ३ ॥
सुखैर्दशार्धसंमितै,-र्विराजमानविग्रहां
सुरेशचापसप्रभां, समस्तदेववन्दिताम् ।
वराऽभयाऽङ्कुशाऽन्वितैः, कपालशूलशङ्खच-
क्रसारसद्वयीगुणा,-ऽङ्कितैः करैर्विराजिताम् ॥ ४ ॥
भवद्रुमस्य मूलतां, गतां मुनीन्द्रवन्दिता-
मऽखण्डभावमण्डल,-प्रकाशकारिणीं शिवाम् ।
समस्तदेवतामयीं, समस्तसिद्धिदायिनी-
मऽपूर्वरूपविग्रहां, सरस्वतीं भवार्तिहाम् ॥ ५ ॥
शुचीन्दुसूर्यलोचनां, शुचीन्दुसूर्यविग्रहां
शुचीन्दुसूर्यसङ्गम,-स्वभावशालिनीं शुभाम् ।
पदद्वयाऽनुकम्पित,-स्वशक्तिचक्रसेवितां
परेशशक्तिमुत्तमां, भजे त्रिलोकसुन्दरीम् ॥ ६ ॥
महामहेश्वरी जगद्वि,-सर्गसुस्थितिक्षय-
स्वतन्त्रता शरीरिणी, बभूव या महेशितुः ।

यं भर्गो देवस्य
चोदयात् ॥
न भुवनों में
त्मा का पवित्र
ते हैं जो हमारे
यों विषय प्रेरण

1. O Kali, spouse of Girisha, Thou art Earth, Water, Fire, Air and Ether. Thou art All. Thou art One and Beneficient. What can be said in praise of Thee, O Mother! Of Thy mercy show Thy favour towards me, helpless as I am. By Thy grace may I never be reborn.

OM-TAT-SAT.

शरणं तरुणेन्दुशेखरः
शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावभौ
शरणं नान्यदुपैमि दैवतम् ॥ १॥

बहवो भवतानुकम्पिता
किमितीशान न माऽनुकम्पसे ।
दधता किमु मन्दराचलं
परमाणुः कमठेन दुर्धरः ॥ २॥
॥ ॐ नमो भगवते ईश्वरस्वरूपाय॥

## अथ महागायत्रीस्तुतिः ।

सदा गवेषयन् जगत्त्रयेषु वेदमातरं
चिदाऽऽत्मना कृतस्थितिं, समत्र चाऽद्य लब्धवान् ।
उदऽस्तु गद्गदं महोद्‍यात्प्रणौमि भक्तिनौ-
कया सुदुस्तरं, द्रुतं, तितीर्षुराऽऽपदऽर्णवम् ॥ १ ॥
सुदीनलोकपातिनी, सतां कृपाऽतिशोभते
ह्यऽतः सुधांशुचक्षुषे,-क्षयाऽम्ब ! मादृशं जनम् ।
नवाऽपि हीयते तवे,-पदीशि ! पालनेन नो
भवात् यतः कुपुत्रता, न भासते प्रसूहृदि ॥ २ ॥
नमामि मुक्तविद्रुम,-प्रतप्तहाटकाऽसिताऽ-
वदातवर्णसुन्दरैः, षडऽर्धलोललोचनैः ।
सरोजषण्डबान्धव,-प्रतप्तहाटकप्रभैः
किरीटरत्नरंजितैः, सुधांशुखण्डमंडितैः ॥ ३ ॥
मुखैर्दशार्धसंमितै,-र्विराजमानविग्रहां
सुरेशचापसप्रभां, समस्तदेववन्दिताम् ।
वराऽभयाऽङ्कुशाऽन्वितैः, कपालशूलशङ्खच-
क्रसारसद्वयीगुणा,-ऽङ्कितैः करैर्विराजिताम् ॥ ४ ॥
भवद्रुमस्य मूलतां, गतां मुनीन्द्रवन्दिता-
मऽखण्डभावमण्डल,-प्रकाशकारिणीं शिवाम् ।
समस्तदेवतामयीं, समस्तसिद्धिदायिनी-
मऽपूर्वरूपविग्रहां, सरस्वतीं भवार्तिहाम् ॥ ५ ॥
शुचीन्दुसूर्यलोचनां, शुचीन्दुसूर्यविग्रहां
शुचीन्दुसूर्यसङ्गम,-स्वभावशालिनीं शुभाम् ।
पदद्वयाऽनुकम्पित,-स्वशक्तिचक्रसेवितां
परेशशक्तिमुत्तमां, भजे त्रिलोकसुन्दरीम् ॥ ६ ॥
महामहेश्वरी जगद्धि,-सर्गसुस्थितिक्षय-
स्वतन्त्रता शरीरिणी, बभूव या महेशितुः ।

यं भर्गो देवस्य
ोदयात् ॥
ीन भुवनों में
मात्मा का पवित्र
ते हैं जो हमारे
यों विषय प्रेरण

1. O Kali, spou
Earth, Water, Fire,
All. Thou art On
can be said in
Of Thy mercy sh
helpless as I am
never be rel

OM

शरणं तरुणेन्दुशेखर
शरणं मे गिरिराजकन्
शरणं पुनरेव तावमे
शरणं नान्यदुपैमि दे

बहवो
किमितो
दयता
परमा

॥ ॐ नमो भगवते ईश्वरस्वरूपाय॥



द्विपत्रिताऽदिभेदतो, लतायमानविग्रहा
त्रयीश्वरी सदा तु सा, जगज्जयाय जायताम् ॥
नमामि तन्मुखाऽरविन्दपञ्चकं मलाऽपहं
गलैकनालकं सदाविकासि, भक्तिसम्भवम् ।
स्वभक्तहंससेवितं, शुचीन्दुपद्मबन्धवः
प्रतीकभूतविग्रहा, गता हि यत्र पञ्चताम् ॥ ८
भवाऽर्णवेऽतिदुःसह,-स्मराऽधिदिग्धमानसं
षडूर्मिनित्यपीडितं, जनं दिधीर्षुमानसा ।
श्रुतिध्वनिस्फुरन्मुखा,-ऽरविन्दभूसुरैः सदा
त्रिसन्ध्यमीश्वरी नुता,-ऽस्तु सा सुखप्रदा हि नः
त्रयीप्रसूः स्वदृष्टिपा,-तधूतभक्तिकल्मषा
समैर्जनैर्नुता मुदा, स्ववर्णधर्मभेदतः ।
निलिम्पनिम्नगामिषे,-ण पादधौतजं जलं
यदीयमाऽऽगतं क्षितिं, तनोतु नः शिवं तु सा
स्वदम्भवञ्चिताऽखिलं, कुभोगसक्तमानसं
सदाशुचिं कुमार्गगं, शठं च शंकसे यदि ।
कथं स्वपादचिन्तनो,-त्थवैभवं नहीश्वरि !
यतोऽङ्घ्रिचिन्तकं दया,-दृशेक्षसे न मादृशम् ॥
अनेकदोषदूषिते,-ष्वऽनिर्विवेचना सती
स्वतन्त्रशक्तिरीश्वरी, भवाघनाशकारिणी ।
कृपामयीं दृशं विधाय सा स्वभक्तिपात्रितं
स्वपत्कजे मधुव्रतं, करोतु मामऽहर्निशम् ॥ १२
त्रिसन्ध्यमिष्टदैवतं, सुकेशवास्यजं स्तवं
स्मरन् हृदीद्धभावनो, विधाय वेदमातरम् ।
विधूय पापसञ्चयं, वितीर्य कीर्तिमुत्तमा-
मिहत्वऽमुत्र कैवलं, पदं स याति निर्भयम् ॥

इति श्रीमहाना

ओं भूर्भुवः स्वस्तत्सवितु र्वरेण्यं भर्गो देवस्य
धीमहि धियो यो नः प्रचोदयात् ॥

वह भूर्भुवः स्वः इन तीन भुवनों में व्यापक सर्व प्रेरक परमात्मा का पवित्र प्रकाश हम स्मरण करते हैं जो हमारे बुद्धियों को सर्व कार्यों विषय प्रेरण करता है ॥

अथ सरस्वतीस्तुतिः ॥

ॐ सितवर्णालङ्कारे,! सरस्वति! समस्तवाङ्मयाऽऽधारे!
कमलजमानसवरले! मृगाङ्कधवले! नमस्तुभ्यम् ॥ १॥
धन्यः स एव लोके, स एव पूज्यः स एव सर्वगुरुः।
यस्य मुखकमलकोशे, वाङ्मयि कुलदेवते! वससि ॥ २॥
कस्त्वां विना विवेकी विवेकविकलस्य निष्फलं जन्म।
तस्मात् भारति भविनां, त्वमेव हेतुर्विवेकेऽपि ॥ ३॥
लक्ष्मीवानऽपि पुरुषः, शूरः सुभगोऽपि कामसमरूपः।
वृष इव विबुधसभायां, प्रतिभात्यऽमले! त्वया रहितः॥ ४॥
मुनिमनुजमाननीयो, मात! मूर्खोऽ मानवो दक्षः।
निश्शेषशास्त्रवक्ता, त्वन्मंत्रध्यानतो भवति ॥ ५॥
कुवलयदृशः क्व ताव, द्वेश्मनि विलसन्ति कुचभराऽऽनम्राः।
यावदऽसिताऽब्जनयने! न त्वं तुष्टासि देवि भुवि भविनाम् ॥ ६॥
जित्वा नरोऽरिराजक, मऽगगुरु गजवाजि पुरुषबलसहितः।
यदुपैति तत्समग्रं, त्वच्चरणनुतेः फलं तस्य ॥ ७॥
आवर्जिताऽपि कष्टैरिह जन्मनि मुञ्चति नरं श्रीः।
न त्वं सत्प्रभवेष्विति मत्वा को नौति नो भवतीम् ॥ ८॥
कविवरवदनसरोरुह, विहरणविस्रम्भविभ्रमद्भ्रमरि!
भगवति! पञ्चमुखीश्वरि! वागीश्वरि! नमस्तेऽस्तु ॥ ९॥

शम्भुप्रणतां वाणीं, भक्त्या यः स्तौति सोऽचिरेणैव ।
अवहितबुद्धिप्रसरो, कविराजो जायते मनुजः ॥ १० ॥

इति श्रीकालिदासकृता सरस्वतीस्तुतिः ॥

---

कृष्ण त्वदीय पदपंकजपंजरान्ते
अद्यैव मे विशतु मानसराजहंसः ।
प्राण प्रयाणसमये कफवातपित्तैः
कण्ठाऽवरोधनविधौ स्मरणं कुतस्ते ॥

O Krishna, may this king-swan of my mind get encaged this very moment, in the cage of Thy Lotus-Feet! How ay! can it meditate on Thy form at the time of death, when the throat will be chocked by cough, phlegm and choler.

---

# प्रार्थनास्तुतिः ॥

ॐ दुर्निवार भवध्वान्त, ध्वंसनैककृतेक्षणाम् ।
नौमि मोहविनाशाय, भीतो ब्रह्मादिदैवताम् ॥ १ ॥
दुर्गतिं हर मे देवि, बहुजन्म शतार्जिताम् ।
प्राप्य कल्पतरुच्छायां, कथं सन्तप्यते जनैः ॥ २ ॥
पश्य मामाऽऽशु गायत्रि, विस्यंतं स्निग्धचक्षुषा ।
न बालमऽवलं पुत्रं, मुञ्चत्यऽग्रगमम्बिका ॥ ३ ॥
एहि मां पाणिपद्मेन, देहि तूर्णं वरं शुभम् ।
महामोहाऽऽकुलं दीनमेहि मां स्पृश नित्यशः ॥ ४ ॥
मातः प्रतीक्षते नाऽर्तो, यत्तदाऽऽशु प्रसीद मे ।
हित्वाऽक्षसूत्रं सावित्रि, निर्विघ्नं पश्य मामिह ॥ ५ ॥
शृण्वतो नाऽन्यकृत्यं स्यात्त्वं परहितं कुरु ।
ब्रह्मविष्णुहराद्यास्त्वामाऽऽश्रयन्ति सुरेश्वरि ॥ ६ ॥
॥ इति प्रार्थनास्तुतिः ॥

सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ॥

चिदग्निसंहारमरीचिमन्त्रसंवित् विकल्पान्गलयन्नुदेति ।

अनन्तजगदाकारस्वीकारेऽप्येकलक्षणाम् ।
तां स्वसंविदमाविश्य विकल्पान्न विकल्पये ॥

विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः ।
परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः ॥

---

संवित् प्रकाशपरमार्थतया यथैव
भात्या मृशति तप्याति तथैव चान्तः ।
सन्तः समस्तमया चित्प्रतिभाविमर्श-
सारं समाम्नायत शास्त्रमनुत्तरात्म ॥

=

विघ्नायुतसहस्रंतु परोत्साहसमन्वितम् ।
प्रहरत्यनिशं जन्तेः सत्वस्त्वभिमुखस्य च ॥
विघ्नेषस्तु भवाम्बोधि समुत्तरणकारिणः ॥

